# केनोपनिषद्

आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणम-स्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु

ॐ शान्तिः शान्तिः शान्तिः

केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः
केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति   १

श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचँ स उ प्राणस्य प्राणः
चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति   २

न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो न विजानीमो यथैतद-नुशिष्यादन्यदेव तद्विदितादथो अविदितादधि
इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे   ३

यद्वाचानभ्युदितं येन वागभ्युद्यते
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते   ४

यन्मनसा न मनुते येनाहुर्मनो मतम्
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते   ५

यच्चक्षुषा न पश्यति येन चक्षूँषि पश्यति
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते   ६

यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदँ श्रुतम्
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते   ७

यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते

तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते  ८

इति केनोपनिषत्सु प्रथमः खराडः  १

यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम्
यदस्य त्वं यदस्य च देवेष्वथ नु मीमांस्यमेव ते मन्ये विदितम्  १

नाहं मन्ये सुवेदेति नो न वेदेति वेद च
यो नस्तद्वेद तद्वेद नो न वेदेति वेद च  २

यस्यामतं तस्य मतं मतं यस्य न वेद सः
अविज्ञातं विजानतां विज्ञातमविजानताम्  ३

प्रतिबोधविदितं मतममृतत्वं हि विन्दते
आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम्  ४

इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः
भूतेषु भूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति  ५

इति द्वितीयः खराडः  २

ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त
त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति  १

तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानत किमिदं यक्षमिति  २

तेऽग्निमब्रुवञ्जातवेद एतद्विजानीहि किमेतद्यक्षमिति तथेति  ३

तदभ्यद्रवत्तमभ्यवदत्कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा अहमस्मीति
४

तस्मिंस्त्वयि किं वीर्यमित्यपीदँ सर्वं दहेयं यदिदं पृथिव्यामिति ५

तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ६

अथ वायुमब्रुवन्वायवेतद्विजानीहि किमेतद्यक्षमिति तथेति ७

तदभ्यद्रवत्तमभ्यवदत्कोऽसीति वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अ-हमस्मीति ८

तस्मिंस्त्वयि किं वीर्यमित्यपींदँ सर्वमाददीय यदिदं पृथिव्यामिति ९

तस्मै तृणं निदधावेतदादत्स्वेति तदुपप्रेयाय सर्वजवेन तन्न शशाकादातुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति १०

अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति
तथेति तदभ्यद्रवत्तस्मात्तिरोदधे ११

स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमनामुमाँ हैमवतीं ताँ होवाच किमेतद्यक्षमिति १२

इति तृतीयः खण्डः ३

सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो हैव विदांच-कार ब्रह्मेति १

तस्माद्वा एते देवा अतितरामिवान्यान्देवान्यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं प-स्पृशुस्ते ह्येनत्प्रथमो विदांचकार ब्रह्मेति २

तस्माद्वा इन्द्रोऽतितरामिवान्यान्देवान्स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत्प्रथमो विदांचकार ब्रह्मेति ३

तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा३ इतीन्न्यमीमिषदा३ इत्यधिदैवतम् ४

अथाध्यात्मं यदेतद्गच्छतीव च मनोऽनेन चैतदुपस्मरत्यभीक्ष्णं संकल्पः ५

तद्ध तद्वनं नाम तद्वनमित्युपासितव्यं स य एतदेवं वेदाभि हैनं सर्वाणि भू-
तानि संवाञ्छन्ति ६

उपनिषदं भो ब्रूहीत्युक्ता य उपनिषद्ब्राह्मीं वाव त उपनिषदमब्रूमेति ७

तस्यै तपो दमः कर्मेति प्रतिष्टा वेदाः सर्वाङ्गानि सत्यमायतनम् ८

यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्र-
तितिष्ठति ९

इति चतुर्थः खण्डः ४

आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं
ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोनिराकरणमस्त्व-
निराकरणं मेऽस्तु तिदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि
सन्तु

ॐ शान्तिः शान्तिः शान्तिः

इति सामवेदीया केनोपनिषत्समाप्ता